॥ नरसिंहस्तुती शुक्राचार्यप्रोक्त नरसिंहपुराणे ॥

मार्कण्डेय उवाच
वामनेन स विद्धाक्षो बहुतीर्थेषु भार्गवः ।
जाह्नवीसलिले स्थित्वा देवमभ्यर्च्य वामनम् ॥ १॥

ऊर्ध्वबाहुः स देवेशं शंखचक्रगदाधरम् ।
हृदि संचिन्त्य तुष्टाव नरसिंहं सनातनम् ॥ २॥

शुक्र उवाच
नमामि देवं विश्वेशं वामनं विष्णुरूपिणम् ।
बलिदर्पहरं शान्तं शाश्वतं पुरुषोत्तमम् ॥ ३॥

धीरं शूरं महादेवं शङ्खचक्रगदाधरम् ।
विशुद्धं ज्ञानसम्पन्नं नमामि हरिमच्युतम् ॥ ४॥

सर्वशक्तिमयं देवं सर्वगं सर्वभावनम् ।
अनादिमजरं नित्यं नमामि गरुडध्वजम् ॥ ५॥

सुरासुरैर्भक्तिमद्भिः स्तुतो नारायणः सदा ।
पूजितं च हृषीकेशं तं नमामि जगद्गुरुम् ॥ ६॥

हृदि संकल्प्य यद्रूपं ध्यायन्ति यतयः सदा ।
ज्योतीरूपमनौपम्यं नरसिंहं नमाम्यहम् ॥ ७॥

न जानन्ति परं रूपं ब्रह्माद्या देवतागणाः ।
यस्यावताररूपाणि समर्चन्ति नमामि तम् ॥ ८॥

एतत्समस्तं येनादौ सृष्टं दुष्टवधात्पुनः ।
त्रातं यत्र जगल्लीनं तं नमामि जनार्दनम् ॥ ९॥

भक्तैरभ्यर्चितो यस्तु नित्यं भक्तप्रियो हि यः ।
तं देवममलं दिव्यं प्रणमामि जगत्पतिम् ॥ १०॥

दुर्लभं चापि भक्तानां यः प्रयच्छति तोषितः ।
तं सर्वसाक्षिणं विष्णुं प्रणमामि सनातनम् ॥ ११॥

नरसिंहपुराणे अध्याय ५५ श्लोक २-१२, अध्याय श्लोक संख्या २०

श्रीनरसिंहपुराणे शुक्रवरप्रदानो नाम पञ्चपञ्चाशोऽध्यायः ॥ ५५॥